# .. shrIbhairavAShTakam 2 ..

# ॥ श्रीभैरवाष्टकम् २ ॥

## Sanskrit Document Information

Text title : bhairvAShTakam2

File name : bhairvAShTakam2.itx

Category : aShTaka, shiva

Location : doc_shiva

Author : Gargyamuni

Language : Sanskrit

Subject : philosophy/hinduism/religion

Transliterated by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Proofread by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Latest update : June 30, 2017

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



August 20, 2017

*sanskritdocuments.org*

# ॥ श्रीभैरवाष्टकम् २ ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीउमामहेश्वराभ्यां नमः ॥

॥ श्रीगुरवे नमः ॥

॥ श्रीभैरवाय नमः ॥

श्रीभैरवो रुद्रमहेश्वरो यो महामहाकाल अधीश्वरोऽथ ।
यो जीवनाथोऽत्र विराजमानः श्रीभैरवं तं शरणं प्रपद्ये ॥ १॥

पद्मासनासीनमपूर्वरूपं महेन्द्रचर्मोपरि शोभमानम् ।
गदाऽब्ज पाशान्वित चक्रचिह्नं श्रीभैरवं तं शरणं प्रपद्ये ॥ २॥

यो रक्तगोरश्च चतुर्भुजश्च पुरः स्थितोद्भासित पानपात्रः ।
भुजङ्गभूयोऽमितविक्रमो यः  श्रीभैरवं तं शरणं प्रपद्ये ॥ ३॥

रुद्राक्षमाला कलिकाङ्गरूपं त्रिपुण्ड्रयुक्तं शशिभाल शुभ्रम् ।
जटाधरं श्वानवरं महान्तं  श्रीभैरवं तं शरणं प्रपद्ये ॥ ४॥

यो देवदेवोऽस्ति परः पवित्रः भुक्तिञ्च मुक्तिं च ददाति नित्यम् ।
योऽनन्तरूपः सुखदो जनानां श्रीभैरवं तं शरणं प्रपद्ये ॥ ५॥

यो बिन्दुनाथोऽखिलनादनाथः श्रीभैरवीचक्रपनागनाथः ।
महाद्भूतो भूतपतिः परेशः श्रीभैरवं तं शरणं प्रपद्ये ॥ ६॥

ये योगिनो ध्यानपरा नितान्तं स्वान्तःस्थमीशं जगदीश्वरं वै ।
पश्यन्ति पारं भवसागरस्य श्रीभैरवं तं शरणं प्रपद्ये ॥ ७॥

धर्मध्वजं शङ्कररूपमेकं शरण्यमित्थं भुवनेषु सिद्धम् ।
द्विजेन्द्रपूज्यं विमलं त्रिनेत्रं श्रीभैरवं तं शरणं प्रपद्ये ॥ ८॥

भैरवाष्टकमेतद् यः श्रद्धा भक्ति समन्वितः ।
सायं प्रातः पठेन्नित्यं स यशस्वी सुखी भवेत् ॥ ९॥

॥ श्रीगार्ग्यमुनिविरचितं भैरवाष्टकं सम्पूर्णम् ॥

